# श्रीशङ्कराचार्याष्टोत्तरशतनामस्तोत्रम्

श्रीशङ्कराचार्यवर्यो ब्रह्मानन्दप्रदायकः ।
अज्ञानतिमिरादित्यस्सुज्ञानाम्बुधिचन्द्रमाः ॥ १॥

वर्णाश्रमप्रतिष्ठाता श्रीमान्मुक्तिप्रदायकः ।
शिष्योपदेशनिरतो भक्ताभीष्टप्रदायकः ॥ २॥

सूक्ष्मतत्त्वरहस्यज्ञः कार्याकार्यप्रबोधकः ।
ज्ञानमुद्राञ्चितकरश्-शिष्यहृत्तापहारकः ॥ ३॥

परिव्राजाश्रमोद्धर्ता सर्वतन्त्रस्वतन्त्रधीः ।
अद्वैतस्थापनाचार्यस्साक्षाच्छङ्कररूपभृत् ॥ ४॥

षन्मतस्थापनाचार्यस्त्रयीमार्ग प्रकाशकः ।
वेदवेदान्ततत्त्वज्ञो दुर्वादिमतखण्डनः ॥ ५॥

वैराग्यनिरतश्शान्तस्संसारार्णवतारकः ।
प्रसन्नवदनाम्भोजः परमार्थप्रकाशकः ॥ ६॥

पुराणस्मृतिसारज्ञो नित्यतृप्तो महाञ्छुचिः ।
नित्यानन्दो निरातङ्को निस्सङ्गो निर्मलात्मकः ॥ ७॥

निर्ममो निरहङ्कारो विश्ववन्द्यपदाम्बुजः ।
सत्त्वप्रधानस्सद्भावस्सङ्ख्यातीतगुणोज्ज्वलः ॥ ८॥

अनघस्सारहृदयस्सुधीसारस्वतप्रदः ।
सत्यात्मा पुण्यशीलश्च साङ्ख्ययोगविलक्षणः ॥ ९॥

तपोराशिर् महातेजो गुणत्रयविभागवित् ।
कलिघ्नः कालकर्मज्ञस्तमोगुणनिवारकः ॥ १०॥

भगवान्भारतीजेता शारदाह्वानपण्दितः ।
धर्माधर्मविभावज्ञो लक्ष्यभेदप्रदर्शकः ॥ ११॥

नादबिन्दुकलाभिज्ञो योगिहृत्पद्मभास्करः ।
अतीन्द्रियज्ञाननिधिर्नित्यानित्यविवेकवान् ॥ १२॥

चिदानन्दश्चिन्मयात्मा पर्कायप्रवेशकृत् ।

अमानुषचरित्राढ्यः क्षेमदायी क्षमाकरः ॥ १३॥

भव्यो भद्रप्रदो भूरि महिमा विश्वरञ्जकः ।
स्वप्रकाशस्सदाधारो विश्वबन्धुश्शुभोदयः ॥ १४॥

विशालकीर्तिर्वागीशस्सर्वलोकहितोत्सुकः ।
कैलासयात्रसम्प्राप्तचन्द्रमौलिप्रपूजकः ॥ १५॥

काञ्च्यां श्रीचक्रराजाख्ययन्त्रस्थापनदीक्षितः ।
श्रीचक्रात्मक ताटङ्क तोषिताम्बा मनोरथः ॥ १६॥

ब्रह्मसूत्रोपनिषद्भाष्यादिग्रन्थकल्पकः ।
चतुर्दिक्चतुराम्नायप्रतिष्ठाता महामतिः ॥ १७॥

द्विसप्तति मतोच्छेत्ता सर्वदिग्विजयप्रभुः ।
काषायवसनोपेतो भस्मोद्धूळितविग्रहः ॥ १८॥

ज्ञानत्मकैकदण्डाढ्यः कमण्डलुलसत्करः ।
गुरुभूमण्डलाचार्यो भगवत्पादसंज्ञकः ॥ १९॥

व्याससन्दर्शनप्रीतः ऋष्यशृङ्गपुरेश्वरः ।
सौन्दर्यलहरीमुख्यबहुस्तोत्रविधायकः ॥ २०॥

चतुष्षष्टिकलाभिज्ञो ब्रह्मराक्षसपोषकः ।
श्रीमन्मण्डनमिश्राख्यस्वम्भूजयसन्नुतः ॥ २१॥

तोटकाचार्यसम्पूज्य पद्मपादर्चिताङ्घ्रिकः ।
हस्तामलयोगिन्द्र ब्रह्मज्ञानप्रदायकः ॥ २२॥

सुरेश्वराख्य सच्छिष्य सन्यासाश्रम दायकः ।
नृसिंहभक्तस्सद्रत्नगर्भहेरम्बपूजकः ॥ २३॥

व्याख्यसिंहासनाधीशो जगत्पूज्यो जगद्गुरुः ।
इति श्रीमच्छङ्कराचार्यसर्वलोकगुरोः परम् ॥ २४॥

नाम्नामष्टोत्तरशतं भुक्तिमुक्तिफलप्रदम् ।
त्रिसन्ध्यं यः पठेद्भक्त्या सर्वान्कामानवाप्नुयात् ॥

